श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

# ॥ श्रीकामासिकाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# ॥ श्रीकामासिकाष्टकम् ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम्।
कामादधिवसन् जीयात् कश्चिदद्भुत केसरी॥ १ ॥

तपनेन्द्वग्नि नयनः तापानपचिनोतु नः।
तापनीय रहस्यानां सारः कामासिका हरिः॥ २ ॥

आकण्ठमादिपुरुषं
कण्ठीरवमुपरि कुण्ठितारातिम्।
वेगोपकण्ठ सङ्गात्
विमुक्त वैकुण्ठ बहुमतिमुपासे॥ ३ ॥

बन्धुमखिलस्य जन्तोः
बन्धुर पर्यङ्क बन्ध रमणीयम्।
विषम विलोचनमीडे
वेगवती पुळिन केळि नरसिंहम्॥ ४ ॥

स्व स्थानेषु मरुद्गणान् नियमयन् स्वाधीन सर्वेन्द्रियः
पर्यङ्क स्थिर धारणा प्रकटित प्रत्यङ्मुखावस्थितिः।
प्रायेण प्रणिपेदुषां प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतात् अशेष जगतां कामासिका केसरी॥ ५ ॥

विकस्वर नख स्वरु क्षत हिरण्य वक्षः स्थली
निरर्गळ विनिर्गळद्रुधिर सिन्धु सन्ध्यायिताः।
अवन्तु मदनासिका मनुज पञ्च वक्त्रस्य माम्
अहंप्रथमिका मिथः प्रकटिताहवा बाहवः॥ ६ ॥

सटा पटल भीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद् भ्रुकुटिकेऽपि वक्त्रे कृते।
कृपा कपट केसरिन् दनुज डिम्भ दत्त स्तना
सरोज सदृशा दृशा व्यतिभिषज्य ते व्यज्यते॥ ७ ॥

त्वयि रक्षति रक्षकैः किमन्यैः
त्वयि चारक्षति रक्षकैः किमन्यैः।
इति निश्चित धीः श्रयामि नित्यं
नृहरे वेगवती तटाश्रयं त्वाम्॥ ८ ॥

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः
श्रीवेङ्कटेश रचितैस्त्रिदशेन्द्र वन्द्यः।
दुर्दान्त घोर दुरित द्विरदेन्द्र भेदी
कामासिका नरहरिर्वितनोतु कामान्॥ ९ ॥

॥ इति श्रीकामासिकाष्टकं समाप्तम्॥

कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः॥